**(१)यावती द्यावापृथिवी इति दधिघर्मग्रहणं मयि त्यदिति भक्षणम् ॥ ३८ ॥**

तद्धुतशेषस्य। "अथ प्रसुते दधिघर्मेण चरन्ति" (श०ब्रा०१४-३-१-२९) इति। तत्रैतदुक्तम् ॥ ३८ ॥

**त्विषः संवृगिति महाव्रतीये ॥३९॥**

"त्विषः संवृग्" इत्येव भक्षणम्(२) ॥ ३९ ॥

**(३)चात्वाले मार्जनम् ॥ ४० ॥**

'कर्त्तव्यम्' इति सूत्रशेषः। तच्च पाणिनैव कर्त्तव्यम्। द्रव्यान्तरानुपदेशात् ॥ ४० ॥

**(४)शान्तिकरणमाद्यन्तयोः ॥४१॥**

'कर्त्तव्यम्' इति शेषः। स्मरन्ति हि—आदावन्ते च कर्मणः शान्ति-

---

(१) अथ सप्रवर्ग्ये क्रतौ दधिघर्मसम्बन्धिनीं कियतीमितिकर्तव्यतामाह—

"यावती द्यावापृथिवी०" (वा० सं० ३८-२६) इत्यनेन सपवित्रायामग्निहोत्रहवण्यां दधिघर्मग्रहणं कुर्यात्। तच्च यथा कथञ्चित्स्थालीमुखेनैव स्रुचि निनयनम् 'अवद्यति' इत्यश्रवणात्। अत एवोपस्तरणा भिघारणे अपि न भवतः। "स आनीयमान आह होतर्वदस्व" (श० ब्रा० १४-३-१-३०) इत्यादिश्रवणाच्च स्रुचि निनयनमेव स्थालीमुखेन कर्तव्यमिति प्रतीयते। अतो नावदानधर्माः। भक्षणं हुतशेषस्य भक्षाधिकारिभिः कर्तव्यम् "अनुवषट्कृत आहरति" "स उपहवमिष्ट्वा भक्षयति" (श० ब्रा० १४-३-१-३०, ३१) इति श्रवणात्। अत्र तु यजमानस्यैव भक्षणमुक्तम्। कात्यायनेन तु शाखान्तरात् "हुतशेषं घर्मत्विजः सयजमानाः समुपहावं भक्षयन्ति०" (का० श्रौ० १०-१-२२) इति अन्येषामप्युक्तम्।

(२) महाव्रतीयेऽह्नि "त्विषः संवृग" (वा०सं० ३८-२८) इति मन्त्रेण दधिघर्मस्य हुतशेषस्य भक्षणमधिकारिभिः कर्तव्यमिति देवयाज्ञिकाः।

(३) भक्षणानन्तरं मार्जनम्। दधिघर्मस्य कियन्तः पदार्थाः प्रागुक्ताः "सप्रवर्ग्ये दधिघर्म" (का० श्रौ० १०-१-१८) इत्यत्र, कियन्तश्चात्रेति; तत्कस्माद्धेतोः सूत्रकार एव वेदेति देवयाज्ञिकाः।

(४) आदावन्ते प्रवर्ग्यस्य कर्मणः शान्तिकं स्मृतेः।

अङ्गत्वेऽपि प्रवर्ग्यस्य (पराङ्गत्वेऽपि घर्मस्य) भवेत्स्वाध्यायदर्शनात् ॥

तत्र क्रियमाणमुत्तरार्थं भवतीत्येतदुत्तरप्रवर्ग्यार्थमुतोपसदाद्यर्थम्।

करणम्'। (१)तत्प्रवर्ग्यापराङ्गभूते कथमिव भवति ॥ ४१ ॥

तदुच्यते—

(२)स्वाध्यायदर्शनात् ॥ ४२ ॥

अत्र भवति। दृष्टं हि शान्तिकरणम्। "ऋचं वाचं प्रपद्ये" (३)इत्ये वमादि तस्मादत्र भवति। एतच्च द्वारापिधानोत्तरकालात्पूर्वम्। (४)पूर्वमासन्द्यां करोतीत्यतः (५)प्रागन्त्यात्समाप्ते हि प्रवर्ग्ये पुनः क्रियते। तत्र क्रियमाणमुत्तरार्थं भवति, स्वाध्यायदर्शनादिति ॥ ४२॥

इति कात्यायनसूत्रभाष्ये उपाध्यायकर्ककृतौ

षड्विंशतिमोऽध्यायः समाप्तः।

---

तत्रोत्तरप्रवर्ग्यार्थत्वे तदादौ द्वाराऽपिधानोत्तरं पुनर्न स्यात्। अन्त्ये च प्रवर्ग्यानुष्ठाने'''ऽत्र प्रवर्ग्याभावात् उत्तरं न स्यात्। प्रवर्ग्याङ्गत्वादुपसदाद्यर्थत्वमप्ययुक्तमेव।

''''''शान्तिकं तच्च निवृत्तेऽत्र प्रवर्ग्यके।

क्रियमाणं तदर्थं नो युक्तं स्यादुपसत्सु तत् ॥

युज्यते तेन भाष्योक्तमुत्तरार्थं सुयुक्तिजम्।

तथा च छन्दोगसूत्रे दर्शनम्—अहर्गणेष्वाहरा''' ह्येदुत्तरार्थाऽहरन्तिकीति

शान्तिराद्यन्तयोरुक्ता तावतैकान्ततो न हि।

अङ्गत्वं किन्त्वपेक्षायां सा निवृत्ताऽपवर्गतः ॥

उत्तरे तु प्रवर्ग्ये तद्विधानान्नैव'''''' ।

तेनोत्तरे प्रवर्ग्योऽपि पुरोऽन्ते शान्तिकं भवेत् ॥

(१) 'तत्प्रवर्ग्ये' इ० पा०।

(२) 'स्वाध्याय दर्शनात् स्वाध्याय दशनात्' इ० पा०।

(३) प्रवर्ग्यचरणस्यादौ अन्ते च "ऋचं वाचम्" (वा० सं० ३६-१) इत्यध्यायेन शान्तिकरणं कर्तव्यम्। कुत एतत्? स्वाध्याये मन्त्रपाठे अस्य शान्तिकरणस्य 'ऋचं वाचम्' इत्यध्यायस्य प्रवर्ग्यमन्त्राणामादौ दर्शनात्। अत एवोक्तम् (अनुक्रमे ४-५) 'आद्योऽध्यायः शान्त्यर्थो वैश्वदेव' इति। तच्च द्वारापिधानोत्तरकाल आदिमम् पात्राणामासन्द्यामासादनानन्तरमन्तिममिति।

(४) 'सर्वमासन्द्याम्' इ० पा०। (५) 'प्रागन्त्यम्' इ० पा०।

## कात्यायनश्रौतसूत्रोत्तरभागस्थसूत्राणामकारादि

# अनुक्रमणिका ।

* इति *



आयुर्वेद तथा संस्कृत की सब प्रकार की पुस्तकों के मिलने का एक मात्र पता—

**जयकृष्णदास-हरिदास गुप्त—**

**चौखम्बा संस्कृत सीरिज़ आफिस,**

**बनारस सिटी।**